(भरतवाक्यम् ।)

आशास्यमभ्यधिगमात्प्रभृति प्रजानां
संपद्यते न खलु गोप्तरि नाग्निमित्रे ॥ २० ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति श्रीकालिदासस्यकृतौ मालविकाग्निमित्रे पञ्चमोऽङ्कः ।**

---

क्यम् । **आशास्यमित्यादि** । प्रजानां जनानामभ्यधिगमात्संप्राप्तेः । परिग्रहादित्यर्थः । तस्मात्प्रभृत्यारभ्याग्निमित्रेऽस्मिन्नायके गोप्तरि रक्षके सति तासांप्रजानामाशास्यमपेक्ष्यवस्तु न संपद्यत इति न न संभवतीति न। संभवत्येवेत्यर्थः।अनेन आशास्यसिद्धिकथनरूपेण शुभशंसनात्प्रशस्तिर्नाम संध्यङ्गमुक्तं भवति । यदुक्तं— 'प्रशस्तिः शुभशंसनम्' इति । सर्वनाटकप्रयोगान्ते भरतेन सर्वकालसाधारणे आशीर्वचने कर्तव्ये सति अत्र प्रजानामाशास्यसिद्धिं प्रति गोप्तुरग्निमित्रस्य कथनं तत्कालराजोपलक्षणमिति मन्तव्यम् ॥ इति **श्रीकाटयवेमभूपविरचिते कुमारगिरिराजीये मालविकाग्निमित्रव्याख्याने पञ्चमोऽङ्कः ।**

श्रीमत्काटयवेमस्य कृतिर्विज्ञानशालिनः ।
कुमारगिरिराजीया जीयादाचन्द्रतारकम् ॥